

ओंकारं बिन्दु संयुक्तम् नित्य ध्यायन्ति योगिनः ।
कामदं मोक्षदं चैव ओंकारं तं नमाम्यहम् ।।

# नित्य पाठमाला







प्रकाशक :
विश्वभारती महिला कल्याण केन्द्र, रैणावारी,
श्रीनगर – कश्मीर

मूल्य : एक रुपया।

# परिचय

प्राय: आधुनिक काल में देखने में आता है कि प्रकृति के किसी भी प्राणी पदार्थ तथा किसी भो परिस्थिति में शान्ति नहीं है अपितु शान्ति का समूलनाश होकर सांसारिक भोगों एवं कामनाओं की पूर्ति के लिए कटिबध होकर प्रयत्नशील होना तथा अधर्म का प्रादुर्भाव ही दृष्टिगोचर होता है। जिस से हमारी संस्कृति तथा ईश्वरीयसत्ता का अध:पतन होने लगा है।

इसमें संशय नहीं है कि आधुनिक वैज्ञानिक युग में विज्ञान तथा भौतिकता की अत्यन्त उन्नति हुई है परन्तु धार्मिक भावना विनाशीन्मुख हो रही है तथा शान्ति का कहीं भी नामोच्चारण तक नहीं होता है। जिसके लिए संसार के नेता एवं वैज्ञानिक कटिबध होकर प्रयत्नशील है। उनका कहना है कि केवल भगवत्परायण रहने, पौराणिक संस्कृति अपनाने, वेदाध्ययन तथा धार्मिकशास्त्र अध्ययन करने से मानसिक शान्ति प्राप्त हो सकती है।

इसी सिद्धान्त को विशाल बनाने के लिए विश्वभारती–महिला कल्याण केन्द्र के कार्य-कर्ताओं ने विश्वभारती कन्या विद्यालय एवं विश्वभारती महा विद्यालय का निर्माण किया है। इन्हीं के अत्युत्कट प्रयत्नों के परिणाम स्वरूप यह एक छोटा सा पौदा विशालवृक्ष के रूप में परिणत हुआ है। यहां प्रति रविवार प्रातः रामायण तथा श्री गीता और अन्य शास्त्रों का अध्ययन होता है और बालिकाओं को धार्मिक शिक्षा मिलती है।

अब तो इन्ही बालिकाओं के हित के लिए विश्वभारती महिला कल्याण केन्द्र के सदस्यों विशेषकर कार्य-कारणी सभा के मुख्यसदस्य श्री सुदर्शन कौल (धर्मार्थी) की प्रेरणा एवं सहानुभूति की प्राप्ति से नित्य पाठमाला का संकलन किया गया है।

इसमें प्राय: ऐसे स्तोत्रों का संकलन किया गया जिनको अबोध बालक-बालिकाऐं सुगमता से अध्ययन कर सकेंगे क्योंकि इसका संकलन इसी उपलक्ष्य में सुगम रीति से किया गया है कि यह लोकप्रिय हो तथा धार्मिक भावना बढाने का कारण बनें एवं मनोरंजन का भी कारण हो।

इसमें क्रमश: गुरुवन्दना, गणेशस्तुति, भगवानविष्णु, श्री राम, श्री कृष्ण, महावीर, जगदम्बा तथा अन्य देवियों के श्लोक एवं स्तुतियों का संग्रह किया गया है।

यदि इसमें किसी प्रकार की त्रुटियां हों तो मैं क्षमा प्रार्थी हूँ। मुझे आशा है कि इस मेरे तुच्छ प्रयत्न को सारी जनता अपनाने से सफल बनादेंगे।

संग्रह कर्ता

अर्जुननाथ हुण्डू अध्यापक

रैणावारी–श्रीनगर



नमो नमो वाङ्य्नसातिभूमये नमो नमो वाङ्मनसैक भूतये ।
नमो नमोनन्तसुखैकदायिनी, नमो नमोनन्तसुखैकसिन्धवे ।।
नमो नमः शाश्वतशान्तिहेतवे, क्षमादयापूरितचारुचेतसे ।
गजेन्द्ररूपाय गणेश्वराय ते, परस्य पुंसः प्रथमाय सूनवे ।।
नमो नमः कारणकारणाय ते, नमो नमो मङ्गलमङ्गलात्मने ।
नमो नमोवेदविदां मनीषिणामुपासनीयाय नमो नमो नमः ।।



या कुन्देन्दुतुषारहारधवला या श्वेतपद्मासना ।
या वीणावरदण्डमण्डितकरा या शुभ्रवस्त्रावृता ।।
या ब्रह्माच्युतशंकरप्रभृतिभिर्देवैः सदा वन्दिता ।
सा मां पातु सरस्वती भगवतीं निःशेषजाड्यापहा ।।
शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं ।
वीणापुस्तकधारिणीमभयदा जाड्यान्धकारापहाम ।।
हस्ते स्फाटिकमालिका च दधती पद्मासने संस्थितां ।
वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ।।



मार्तंनमामि कमले कमलायताक्षि ।

श्रीविष्णुहृतकमलवासिनि विश्वमातः ।।

क्षीरोदजे कमलकोमलगर्भगौरि ।

लक्ष्मि प्रसीद सततं नमतां शरण्ये ।।

या श्रीः स्वयं सुकृतिनां भवनेष्व लक्ष्मीः ।

पापात्मनां कृतधियां हृदयेषु बुद्धिः ।।

श्रद्धा सतां कुलजनप्रभवस्य लज्जा ।

तां त्वां नताःस्म परिपालय देवि विश्वम् ।।

अक्षस्त्रकपरशगदेषुकुलिशात्पदां धनुष्कुण्डिकां

दण्डं शक्तिमसिं च चर्म जलजं घण्टां सुराभाजनम् ।।

शूलं पाशसुदर्शनौ च दधतीं हस्तैः प्रवालप्रभैः ।

सेवे सैरिभमर्दिनीमिह महा लक्ष्मीं सरोजस्थिताम्ः ।।



उों श्रीमहागणेशाय नमः

ॐ नित्य प्रार्थना विधि :–

सदा स्नान आदि नित्य क्रिया से निवृत होकर पूर्व दिशा की ओर मुख करके शुद्ध आसन पर पद्मासन में बैठकर धूप और रत्नदीप जलाकर आत्मोद्धार तथा जगत्कल्याण के लिए आदिदेव भगवान गणेश का ध्यान तथा अपने इष्टदेव और इष्टदेवी का ध्यान करके निम्न लिखित पाठावाली को पढ़ें :–

सर्वप्रथम दोनों हाथ जोडके पढें :– गुरुवन्दना

उों शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्याये सर्वविघ्नोपशान्तये ।।
अभिप्रीतार्थसिद्धयर्थं पूजितो यः सुरैरऽपि ।
सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ।
लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ।
येषामिन्दीवरश्यामो हृदयस्थो जनार्दन ।।
नमामि सद्गुरुं शान्तं प्रत्यक्षं शिवरूपिणम् ।
शिरसा योगपीठस्थं धर्मकामार्थसिद्धये ।।
महाबले महोत्साहे महाभयविनाशिनी ।
त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्धिनि ।।
अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ।।

ध्यानमूलं गुरुर्मूर्तिः पूजामूलं गुरु पदम् ।
ज्ञानमूलं गुरुवाक्यं मोक्षमूलं गुरुकृपा ।।
गुरुर्ब्रह्मा गुर्विष्णुर्गुरुः साक्षान्महेश्वरः ।
गुरुरेव जगत्सर्वं तस्मै श्रीगुरवे नमः ।।
ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्ति,
द्वन्द्वातीतं गगनसदृश्यं तत्त्वमस्यादिलक्ष्यम् ।
एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं,
भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ।।
हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे तु कश्चन ।
सर्वदेवस्वरूपाय तस्मै श्रीगुरवे नमः ।।
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ।।

---

अथ गणेशस्तुति :—

ओं बिभ्रद्दक्षिणहस्तपद्मयुगले दन्ताक्षसूत्रे शुभे,
वामे मोदकपूर्णपात्रपरशू नागोपवीती त्रिदृक् ।
श्रीमान् सिंहयुगासनः श्रुतियुगे शंखौ वहन् मौलिमान्,
दिश्यादीश्वरपुत्र ईशभगवान् लम्बोदरः शर्मनः ।।
सिन्दूरकुंकुमहुताशनविद्रुमार्क रक्ताब्जदाडिमनिभाय चतुर्भुजाय ।
हेरम्बभैरव गणेश्वरनायकाय, सर्वार्थसिद्धिफलदाय गणेश्वराय ।।
गौरीपुत्रं त्रिनेत्रं गजमुखसहितं नागयज्ञोपवीतं,
पद्माक्षं सर्वभक्षं सकलजनप्रियं सर्वगन्धर्वपूज्यम् ।
संपूर्णं भालचन्द्रं वरदमतिबलं हन्तृकं चासुराणां,
हेरम्बमादिदेवं गणपतिममलं सिद्धिदातारमीडे ।।
गजवदनमचिन्त्यं तीक्ष्णदन्तं त्रिनेत्रं,

ब्रृहदुदरमनन्तं दन्तमाले ददानम् ॥
परशुचषकपद्मद्वन्द्वहस्तारबिन्दं,
हरियुगलनिविष्टं श्रीगरोशं भजामि ।
जेतुं यस्त्रिपुरं हरेण हरिणा व्याजाद्बलेर्बन्धने,
स्त्रष्टुं वारिरुहोद्भवेन विधिना शेषेणधर्तुं धराम् ।
पार्वत्या महिषासुरप्रमथने सिद्धाधिपैर्मुक्तये,
ध्यातः पञ्चशरेण लोकविजयेपायात्स नागाननः ॥

मुख्यं द्वादशनमानि गणेशस्य महात्मनः ।
यः पठेत्तु शिवोक्तानि स लभेत्सिद्धिमुत्तमाम् ॥
प्रथमं वक्रतुण्डं तु चैकदन्तं द्वितीयकम् ।
तृतीयं कृष्णपिङ्गं तु चतुर्थं च कर्पर्दिनम् ॥
लम्बोदरं पंचमं तु षष्टं विकटमेव च ।
सप्तमं विघ्नराजेन्द्रं धूम्रवर्णं तथाष्टमम् ॥
नवमं भालचन्द्रं तु दशमं तु विनायकम् ।
एकादशं गणपतिं द्वादशं मन्त्रनायकम् ॥

पठते श्रृणुते यस्तु गणेशस्तवमुत्तमम् ।
मायार्थी लभते भार्यां धनार्थी विपुलं धनम् ॥
पुत्रार्थी लभते पुत्रं मोक्षार्थी परमं पदम् ।
इच्छाकामं तु कामार्थी धमार्थी धर्ममक्षयम् ॥
सुमुखैश्चैकदन्तश्च कपिलो गजकर्णकः ।
लम्बोदरश्च विकटो विघ्नराजो गणाधिपः ॥

धूम्रकेतुर्गणाध्यक्षो भालचन्द्र गजाननः ।
द्वादशैस्तानि नामानि गणेशस्य महात्मनः ॥
यः पठेत् श्रृणुयाद्वापि लभते सिद्धिमुत्तमम्,
विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ।
संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥

हेमजासुतं भजे गणेशं ईशनन्दनम्, एकदन्त वक्रतुण्डनागयज्ञसूत्रकम् । रक्तगात्र धूम्रनेत्र शुक्लवस्त्रमण्डितं कल्पवृक्ष भक्तरक्ष नमोस्तु ते गजाननम् ॥ पाशपाणि चक्रपाणि मूषकादि रोहिणम्, अग्निकोटि सूर्यज्योति वज्रकोटिनिर्मलम् । चित्रमाल भक्तिजाल भालचन्द्रशोभितम्, कल्पवृक्ष भक्तरक्ष नमोस्तु तें गजाननम् ॥ भूतभव्य हव्यकव्य भृगुमार्गवार्चितं दिव्यवह्नि कालजाल लोकपाल वन्दितम् । पूर्णब्रह्म सूर्यवर्ण पूरषं पुरान्तकम्, कल्पवृक्ष० ॥ विश्ववीर्यं विश्वसूर्यं विश्वकर्म निर्मलम्, विश्वहर्ता विश्वकर्ता यत्र तत्र पूजितम् ॥ चतुर्मुखं चतुर्भुजं सेवितुं चतुर्युगम् । कल्पवृक्ष० ॥

---

अथ विष्णुस्तुतिः

ओं श्री परमात्मने विष्णवे नमः ।

ॐ शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं, विश्वाधारं गगनसदृश्यं मेघवर्णं शुभाङ्गं लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ सशङ्खचक्रं सकिरीटकुण्डलं सपीतवस्त्रं सरसीरुहेक्षणम् । सहारवक्षः स्थलकौस्तुभं श्रियं नमामि विष्णुं शिरसा चतुर्भुजम् ॥ ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः । केयूरवान् कनक कुण्डलवान् किरीटी हारीहिरण्मयवपुर्धृतशङ्खचक्रः ॥ नमामि नारायणपादपंकजं करोमिनारायणपूजनं सदा । वदामिनारायणनाम निर्मलं स्मरामि नाराय तत्त्वमव्ययम् ॥ मेघश्यामं पीतकौशेयवासं श्रीवत्साङ्कं कौस्तुभोद्भासिताङ्गम् ॥ पुण्योपेतं पुण्डरीकायताक्षं विष्णुं वन्दे सर्वलोकैकनाथम् ॥ कायेन वाचा मनसेन्द्रियैश्च बुद्ध्यात्मना वाऽनुसृतः स्वभावात् । करोमि यद्यत्सकलं परस्मै नारायणायैवसमर्पयामि ॥

करारबिन्देन पदारबिन्दं मुखारबिन्दे विनिवेशयन्तम् । अश्वत्थपत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि ॥ अच्युतं केशवं रामनारायणं

कृष्णदामोदरं वासुदेवंहरिम् । श्रीधरं माधवं गोपिकावल्लभं जानकीनायकं रामचन्द्रं भजे ।। सूरजं शैशवं सत्यभामाधवं श्रीधरं श्रीपतिं राधिकाराधितम् । इन्दिरामन्दिरं चेतसासुन्दरं देवकीनन्दनं नन्दजं सम्भजे ।। अङ्गनामङ्गनामन्तरे माधवो, माधवं माधवं चान्तरेणांगना, इत्थंमा कल्पिते मण्डले मध्यगः, सञ्जगौ वेणुना देवकीनन्दनः ।। बालिका बालिका बाललीलालयः, संगसन्दर्शितभ्रूलताविभ्रमः, गोपिकागीतदत्तावदानः स्वयं, सञ्जौ वेणुना देवकीनन्दनः ।। जयतु जयतु देवो देवकीनन्दनोऽयं जयतु जयतु मेघश्यामलः कोमलांगो जयतु जयतु पृथ्वीभारनाशो मुकुन्दः ।।

ॐ नीलाम्बुजं श्यामलकोमलांङ्गं सीतासमारोपितवामभागम् ।
पाणौ महासायकचारुचापं नमामि रामं रघुवंशनाथम् ।।
ॐ श्रीरामराम रघुनन्दन रामराम श्रीरामराम भरताग्रज रामराम ।
श्रीरामराम रणकर्कश रामराम श्रीरामराम शरणं भव रामराम ।।

ॐ रामपुरुषोतमनरहरे नारायण केशव गोविन्द गरुडध्वज गुणनिधे दामोदर माधव । श्रीकृष्ण कमलापते यदुपते सीतापते श्रीपते वैकुण्ठाधिपते चराचरपते लक्ष्मीपते पाहि माम् ।।

ॐ गोविन्द गोविन्द हरे मुरारे गोविन्द गोविन्द मुकुन्द कृष्ण ।
गोविन्द गोविन्द रथाङ्गपाणे गोविन्द दामोदर माधवेति ।।

वसुदेवसुतं देवं कंसचाणूरमर्दनम् ।
देवकीपरमानन्दं कृष्णं वन्दे जगद्गुरुम् ।।
कृष्णाय वासुदेवाय देवकी नन्दनाय च ।
नन्दगोपकुमाराय श्रीकृष्णाय नमो नमः ।।
मूकं करोति वाचालं पङ्गु लङ्घयते गिरिम् ।
यत्कृपा तमहं वन्दे परमानन्दमाधवम् ।।
हा कृष्ण मनसि वासिन् क्वासि यादवनन्दन ।
इमामवस्थां संप्राप्तम नाथं किं न रक्षसि ।।

या त्वरा द्रौपदीत्राणे या त्वरा गजमोक्षणे ।
मयि दीने दीनबन्धो सा त्वरा क्व गता हरे ।।

---

ॐ मनोजवं मारुतितुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शरणं प्रपद्ये ।।
ॐ अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लंकाभयंकरम् ।।

—:०:—

अथ शिवस्तुति

ॐ नमः शिवाय वरदाय ।
ओं प्रणतोस्मि महादेव प्रपन्नोस्मि सदाशिव ।
निवारय महामृत्युं मृत्युञ्जय नमोस्तु ते ।।
मृत्युञ्जय महादेव पाहि मां शरणागतम् ।
जन्ममृत्यु जरारोगैः पीडितं भवबन्धनात् ।।
कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् ।
सदारमन्तं हृदयारबिन्दे भवं भवानी सहितं नमामि ।।
हर शम्भो महादेव विश्वेशामरवल्लभ ।
शिव शंकर सर्वात्मन् नीलकण्ठ नमोस्तु ते ।।
तव तत्त्वं न जनामि कीदृशोसि महेश्वर ।
या दृशोसि महादेव तादृशाय नमो नमः ।।
आधीनामगदं दिव्यं व्याधीनां मूलकृन्तनम् ।
उपद्रवाणां दलनं महादेवमुपास्महे ।।
कल्पान्तकाटोपपटुप्रकोप स्फुटादृहासोच्चलिताण्कोशः ।
घोरारिसेनार्णवदुनिवारो महाभयाद्रक्षतु वीरभद्रः ।।

ॐ नमः शिवाय। ओं सङ्ग्रहेण सुखदुःखलक्षणं मां प्रति स्थितमिदं शृणु प्रभु ! सौख्यमेष भवता समागमः स्वामिना विरह एव दुःखिता ॥ तावके वपुषि विश्वनिर्भरेचित्सुधारसमये निरत्यये। तिष्ठतः सततमऽर्चतः प्रभुंजीवितं मृतमऽथाऽन्यदऽस्तुमे ॥ ईश्वरोऽहरऽमेव रूपवान् पिण्डतोऽस्मि सुभगोऽस्मि कोऽपरः। मत्समोऽस्ति जगतीति शोभते मानिता त्वदऽनुरागिणः परम् ॥ कण्ठकोणविनिविष्टमीश ! ते कालकूटमपि मे महामृतम्' अप्युपात्तमऽमृतं भवद्वपुर्भेदवृत्तिर्यदिरोचते न मे ॥ त्वामऽगाधमऽविकल्पमऽद्वयं स्वस्वरूपमखिलार्थघस्मरम्। अविशन्नऽहमुमेश ! सर्वदापूजयेयमऽभिसंस्तुवीय च ॥ आः किं न रक्षसि नयत्यऽयमऽन्तको मां हेलावलेपसमयः किमयं महेश। मा नाम भूत करुणया हृदयस्य पीडा व्रीडाऽपिनास्ति शरणागतमुभ्कतस्त ॥ ॐ नागेन्द्रहाराय त्रिलोचनाय भस्माङ्गरागाय महेश्वराय। देवाधिदेवाय दिगम्बराय तस्मै नकाराय नमः शिवाय ॥ मातङ्गचरमाम्बरभूषणाय समस्तगीर्वाणगणार्चिताय, त्रैलोक्यनाथाय पुरान्तकाय तस्मै मकाराय नमः शिबाय ॥ शिवामुखाम्भोजविकासनाय दक्षस्य यज्ञस्य विनाशकाय। चन्द्रार्कवैश्वानर लोचनाय तस्मै शिकाराय नमः शिवाय ॥ वशिष्ठकुम्भोद्भवगौतमादिमुनीन्द्रवन्द्याय गिरीश्वराय। श्रीनीलकण्ठाय वृषध्वजाय तस्मै मकाराय नमः शिवाय ॥ यज्ञस्वरूपाय जटाधराय पिनाकहस्ताय सनातनाय। नित्याय श्रद्धाय निरञ्जनाय तस्मै मकाराय नमः शिवाय ॥

वपुष्प्रादुर्भावात् अनुमितमिदं जन्मनि पुरा,
पुरारे नैवाहं क्वचिदपि भवन्तं प्रणतवान् ॥
नमन्मुक्तः सम्प्रत्यतनुरहमग्रे प्यनतिमान्,
महेश क्षन्तव्यं तदिदमपराध द्वयमपि ॥
आत्मा त्वं गिरिजामतिः परिजनाः प्राणाः शरीरं गृहं,
पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः ॥
संचारोपि परिक्रमः पशुपते स्तोत्राणि सर्वा गिरो,

यत् यत् कर्म करोमि देव भगवन् तत् तत् तवाराधनम् ।।
करचरणकृतं वाक् कायजं कर्मजं वा, श्रवणनयनजंवा मानसं वापराधम् । विदितमविदितं वा सवमेतत्क्षमस्व,
जय जय करुणाब्धे श्रीमहादेव शम्भो ।।
अद्य मे सफलं जन्म अद्य मे सफलं तपः ।
अद्य मे सफलं ज्ञानं शम्भो त्वत्पाद दर्शनात् ।।

—:०:—

श्री जगदम्बा का ध्यान करके पढ़ें:—

उों श्री दुर्गतिनाशिन्यै नमः ।

श्री इन्द्राक्षीस्तोत्रम् ।।

ॐ इन्द्राक्षी द्विभुजां देवीं पीतवस्त्रधरां शुभाम् ।
वामे वज्रधरां सव्य हस्तेऽभयवरप्रदाम् ।।
सहस्रनेत्रां सूर्याभां नानालंकारभूषिताम् ।
प्रसन्नवदनां नित्यां मप्सरोगणसेविताम् ।।
श्रीदुर्गां सौम्यवदनां पाशाङ्कुशधरां पराम् ।
त्रैलोक्यमोहिनीं देवीं भवानीं प्रणमाम्यहम् ।।

श्री इन्द्र उवाच ।

इन्द्राक्षी नाम सा देवी देवता समुदाहृता ।
गौरी शाकम्भरी देवी दुर्गानाम्नेति विश्रुता ।।
कात्यायनी महादेवी चण्डघण्टा महातपा ।
सावित्री साच गायत्री ब्रह्माणीब्रह्मवादिनी ।।
नारायणी भद्रकाली रुद्राणी कृष्णपिङ्गला ।
अग्निज्वाला रुद्रमुखी कालरात्री तपस्विनी ।।

मेघश्यामा सहस्राक्षी विष्णुमाया जलोदरी ।
महोदरी मुक्तकेशी घोररूपा महाबला ।।
आनन्दा भद्रजानन्ता रोगहर्त्री शिवप्रिया ।
शिवदूती कराली च प्रत्यक्षपरमेश्वरी ।।
इन्द्राणी चन्द्ररूपा च इन्द्रशक्तिः परायणा ।
महिषासुरसंहर्त्री चामुण्डा गर्भदेवता ।।
वाराही नारसिंही च भीमा भैरवानादिनी ।
श्रुतिः स्मृतिर्धृतिर्मेधा विद्यालक्ष्मीः सरस्वती ।।
अनन्ता विजया पूर्णा मनस्तोषाऽपराजिता ।
भवानी पार्वतीदुर्गा हैमवत्यम्बिका शिवा ।।
शिवा भवानी रुद्राणी शङ्करार्धशरीरिणी ।।
एतैर्नामपदैर्दिव्यैः स्तुता शक्रेण धीमता ।
आयुरारोग्यमैश्वर्याऽक्षयसम्पत्तिकारकम् ।।
क्षयापस्मारकुष्ठादि तापज्वरनिवारकम् ।
शतमवर्तयेद्यस्तु मुच्यते व्याधिबन्धनात् ।।
अवर्तयेत्सहस्रेण लभते वाञ्छितं फलम् ।
राजा वशमवाप्नोति सत्यमेव न संशयः ।।
लक्षमेकं जपेद्यस्तु साक्षाद्देवीं स पश्यति ।
त्रिकालं पठते नित्य धनधान्यांश्च सम्पदः ।।
अर्धरात्रे पठेनित्यं मुच्यते व्याधिबन्धनात् ।
ऐन्द्रस्तोत्रमिदं पुण्यं जयेतु फलवर्धनम् ।।
विनाशाय तु रोगाणामपमृत्युं हरत्युत ।
राज्यार्थी लभते राज्यं धनार्थी विपुलं धनम् ।।
इच्छाकामं तु कामार्थी धर्मार्थी धर्ममव्ययम् ।
विद्यार्थी लभते विद्यां मोक्षार्थी परमं पदम् ।।
इन्द्रेण कथितं स्तोत्रं सत्यमेव न संशयः ।।

या माया मधुकैटभप्रमथिनी या महिषोन्मूलिनी,
या धूम्रेक्षणचण्डमुण्डमथिनी या रक्तबीजाशनी ।
शक्ति शुम्भनिशुम्भदैत्यदलिनी या सिद्धलक्ष्मीः परा
सा देवी नवकोटिमूर्तिसहिता मां पातु माहेश्वरी ।।
जप्तं पापहरं नुतं बलकरं सम्पूजितं श्रीकरं,
ध्यातं मानकरं स्तुतं धनकरं सम्भाषितं सिद्धिदम् ।
गीतं सुन्दरि वाञ्छितं प्रतनुते ते पादपद्मद्वयं,
भक्तानां भवभीतिभञ्जनकरं सिद्धयष्टदं पातु नः ।।
मायाकुण्डलिनी क्रिया मधुमती कालीकला मालिनी,
मातङ्गी विजया जया भगवती देवी शिवा शम्भवी ।
शक्तिः शङ्करवल्लभा त्रिनयना वाग्वादिनी भैरवी,
ह्रींकारी त्रिपुरा परापरमयी माताकुमारीत्यसि ।।

—:०:—

ॐ सर्वमङ्गलमङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोस्तुते ।।
महाबले महोत्साहे महाभयविनाशिनि ।
त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्धिनि ।।
शरणागतदीनार्तपरित्राणपरायणे ।
सर्वस्यार्तिहरे देवि नरायणि नमोस्तुते ।।
सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ।
भयेभ्यस्त्राहि नोदेवि दुर्गेदेवि नमोस्तु ते ।।
एतते वदनं सौम्यं लोचनत्रयभूषितम् ।
पातु नः सर्वभीतिभ्यः कात्यायनि नमोस्तुते ।।
ज्वालाकरालमत्युग्रमशेषासुरसूदनम् ।
त्रिशूलं पातु नो भीतेर्भद्रकालि नमोस्तु ते ।।

जयन्ती मङ्गला काली भद्रकाली कपालिनी ।
दुर्गा क्षमा शिवाधात्री स्वाहा स्वधा नमोस्तु ते ।।

देहि सौभाग्यमारोग्यं देहि मे परमं सुखम् ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।।
विधेहि देवि कल्याणं विधेहि परमां श्रियम् ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।।
अचिन्त्यरूपचरिते सर्वशत्रुविनाशिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।।
विधेहि द्विषतां नाशं विधेहि बलमुच्चकैः ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।।
विद्यावन्तं यशस्वन्तं लक्ष्मीवन्तं जनं कुरु ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।।

लक्ष्मि लज्जे महाविद्ये श्रद्धे पुष्टे स्वधे ध्रुवे ।
महारात्रि महाविद्ये नारायणि नमोस्तुते ।।
या देवी सर्वभूतेषु दयारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु बुद्धिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु क्षान्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु लज्जारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु शान्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।

या देवी सर्वभूतेषु श्रद्धारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु लक्ष्मीरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु तुष्टिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु मातृरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
सर्वाबाधाप्रशमनं त्रैलोक्यस्याखिलेश्वरि ।
एवमेव त्वया कार्यमस्मद्वैरिविनाशनम् ।।

यस्याः प्रभावमतुलं भगवाननन्तो ब्रह्मा हरश्च न हि वक्तुमलं बलं च ।
सा चण्डिकाखिलजगत्परिपालनाय नाशाय चाशुभ भयस्यमतिं करोतु ।।

या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः पापात्मनां कृतधियां हृदयेषु बुद्धिः ।
श्रद्धा सतां कुलजनप्रभवस्यलज्जा तां त्वां नताःस्म परिपालय देविविश्वम् ।।

देवि प्रपन्नार्तिहरे प्रसीद प्रसीद मातर्जगतोऽखिलस्य ।
प्रसीद विश्वेश्वरि पाहि विश्वं त्वमीश्वरी देवि चराचरस्य ।।

देवि प्रसीद्व परिपालयनोऽरिभीते र्नित्यं यथासुरवधादधुनैव सद्यः ।
पापानि सर्वजगतां प्रशमं नयाशु उत्पातपाकजनितांश्चमहोपसर्गान् ।।
ते सम्मता जनपदेषु धनानि तेषां तेषां यशांसि न च सीदति धर्मवर्गः ।
धन्यस्त एव निभृतात्मजभृत्यदारा येषां सदाभ्युदयदा भवती प्रसन्ना ।।

दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृताः मतिमतीव शुभां ददासि ।
दारिद्रयदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदाऽऽर्द्रचित्ता ।।

भक्तानुग्रहकारिणी भगवती देवाधिदेवेश्वरी, दीनानाथकृपावनी स्वजननी भक्तानुरक्ता सती ।। ॐ काराक्षरवासिनी सुरनुता सर्वेश्वरी सर्वदा, भूयान्नो वरदा सदाह्यभयदा कामेश्वरी कामदा ।।

या कुन्देन्दुतुषारहारधवला या श्वेतपद्मासना, या वीणावरदण्डमण्डित-करा या शुभ्रवस्त्रान्विता। या ब्रह्मा च्युतशकरप्रभृतिभिर्देवैः सदा वन्दि-ता, सा मां पातु सरस्वती भगवती निःशेष जाड्यापहा ॥

श्री शारिके शरण्ये त्वं मयि दासे कृपां कुरु।
ऋणं रोगं भयं शोकं रिपून् नाशय सत्वरम् ॥
या देवी शिवकेशवादिजननी या वै जगद्रूपिणी।
या ब्रह्मादिपिपीलिकान्तजनता नन्दैकसंदायिनी ॥
या पञ्चप्रणमन्निलिम्पनयनी या चित्कलामालिनी,
सा पायात्परदेवता भगवती श्री राजराजेश्वरी ॥

बीजैः सप्तभिरुज्ज्वलाकृत्तिरसौ या सप्तसप्तिद्युतिः सप्तर्षिप्रणतांघ्रि-पङ्कजयुगा या सप्तलोकार्तिहृत्। काश्मीरप्रवरेशमध्य नगरी प्रद्युम्नपीठे स्थिता देवी सप्तकसंयुता भगवती श्रीशारिका पातु नः। ब्राह्मणं च पुरन्दरं शिवहरी देवान्समस्ता मुनीन् या दृष्ट्या दययाविलोकयति सा देव्यम्बिका पार्वती ॥ चक्रस्था निजबोधभासितजगच्छान्तात्मिका सर्वगा सान्द्रानन्दप्रदा परा भगवती पायात्सदा शारिका ॥ भक्तानां सिद्धिदात्री नलिनयुगकरा श्वेतपद्मासनस्था लक्ष्मीरूपा त्रिनेत्रा हिमकरवदना सर्व-दैत्येन्द्रहर्त्री। वागीशी सिद्धिकर्त्री सकलमुनिजनैः सेविता या भवानी नौम्यहं त्वां हरिहरप्रणतां शारिकां नौमि नौमि ॥ किं किं दुखं दनुज-दलनि क्षीयते न स्मृतायां का का कीर्तिः कुलकमलिनी ख्याप्यते न स्तु-तायाम्। का का सिद्धिः सुरवरनुते प्राप्यते नार्चितायां कं कं योगं त्वयि न चिनुते चित्तमालम्बितायाम् ॥

ज्वालामुखि महाज्वाले ज्वालापिङ्गललोचने,
ज्वालातेजो महातेजो ज्वालमुखि नमोस्तु ते।
नमो भगवति ज्वाले कालि त्रिपुरसुन्दरि,
सर्वबीजपालयन्त्रि ज्वालमुखि नमोस्तु ते ॥

आकाशे चण्डिका देवी पाताले भुववेश्वरी,
मर्त्यलोके जयादेवी पायान्त्रिपुरसुन्दरी ।
तां भवानीं भवाऽनीतक्लेशनाशविशारदाम्,
शरदां शरदम्भोज सितपद्मासनां नुमः ॥
श्री श्री शैले स्थिता या प्रहसितवदना पार्वती शूलहस्ता,
वह्निसूर्येन्दु नेत्रा त्रिभुवन जननी षड्भुजा सर्वशक्ति ।
शाण्डिल्येनोपनीता जयति भगवती भक्तिगम्यानुयाता
सा नः सिंहासनस्था ह्यभिमतफलदा शारदा शंकरोतु ।
प्रातःकाले कुमारी कुमुदकलिकया जप्यमालां जपन्ती,
मध्याह्ने प्रौढरूपा विकसितवदना चारुनेत्रा विशाला ॥
सन्ध्यायां वृद्धरूपा गलितकुचयुगे मुण्डमालां वहन्ती,
सा देवी दिव्यदेहा हरिहरनमिता पातुनो ह्यादिमुद्रा ॥
गङ्गैव मोक्षदा क्षेत्रं गङ्गा किल्विषनाशिनी ।
त्रैलोक्य वरदे गङ्गे हरिगङ्गे नमोस्तु ते ।

दृष्ट्वा जन्मशताधर्मं स्पृष्ट्वा जन्मशताहितम् ।
स्नाता जन्मशतोत्थाघं हन्ति गङ्गा कलौ युगे ॥
हरतीयं महापापं गङ्गेश्वरसमुद्भवा ।
मातृपितृहिते गङ्गे हरिगङ्गे नमोस्तुते ॥
अन्नपूर्णे सदापूर्णे शङ्करप्राण वल्लभे ।
ज्ञानवैराग्यसम्पन्ने भिक्षां देहि नमोस्तु ते ॥
नमः कल्याणदे देवि नमः शङ्करवल्लभे ।
नमो भक्तिप्रदे देवि अन्नपूर्णे नमोस्तु ते ॥
निर्गुणे निष्क्रिये नित्ये सच्चिदानन्दरूपिणि ।
नमोस्तु ते महाराज्ञि पाहि मा शरणागतम् ॥

या द्वादशार्कपरिमण्डितमूर्तिरेका सिंहासनस्थितिमती सुरगैर्वृत्तां च । देवीमनक्षगतिमीश्वरतां प्रपन्नां तां नौमि भर्गवपुषीं परमार्थराज्ञीम् ॥ उद्य-

द्दिवाकरसहस्र रुचि त्रिनेत्रां सिंहासनोपरिगतासुरगोपवीताम्। खड्गाम्बु-जाढयकलशामृतपात्रहस्तां राज्ञीं भजामि विकसद्वदनारविन्दाम्॥ यत्पाद-पङ्कजतलेऽमरमूर्धमौलिन्यस्तेन्द्रनीलमणिसन्ततयः पतन्ति। किञ्जल्कपान-रतमुग्धमधुव्रतान्हि राज्ञी सदाभगवती जननीव नोऽव्यात्॥

स्मृतैवान्तर्गतं पुंसां हरन्ती सकलं मलम्।
जयत्येषा महाराज्ञी भक्तानां कामदायिनी॥
त्रिजगन्मोहिनि ईड्ये मिहिरीभूतसद्गुणे।
नमोस्तुते महाराज्ञि पाहि मां शरणागतम्॥

शेषाशेषमुखगण्य गुणे गुणगणप्रिये। नमोस्तु ते०
सुरासुरनरसिद्ध वन्दनीय पदाम्बुजे। नमोस्तु ते०
चराचरजगत्सृष्टिस्थितिसंहारकारिणि। नमोस्तु ते०
भक्तकल्पलतेऽनल्पवाङ्माधुर्यजितामृते। नमोस्तु ते०
ब्रह्मविष्णुमहेशानवन्दिते गिरिनन्दिनि। नमोस्तु ते०
भक्तानां भीमसंसार पारावारप्रतारिणि। नमोस्तु ते०
निर्गुणे निष्क्रिये नित्ये सच्चिदानन्दरूपिणी। नमोस्तु ते०

राज्ञीस्तोत्रमिदं पुण्यं त्रिसन्ध्यं प्रयतः पठेत्।
असंशयमशेषेण वशयेदखिलं जगत्॥

देवानां त्रितयं त्रयीहुतभुजां शक्तित्रयं त्रिस्वरा-
स्त्रैलोक्यं त्रिपदी त्रिपुष्करमथो त्रिब्रह्म वर्णास्त्रयः।
यत्किञ्चज्जगति त्रिधानियमितं वस्तु त्रिवर्गात्मकं
तत्सर्वंत्रिपुरीतिनामभगवत्यन्वेति ते तत्त्वतः॥

लक्ष्मीं राजकुले जयांरणभुवि क्षमङ्करीमध्वनि
क्रव्यादद्विपसर्पभाजि शवरीं कान्तारदुर्गे गिरौ।
भूतप्रेतपिशाचजम्बुकभये स्मृत्वा महाभैरवीं
व्यामोहे त्रिपुरां तरन्ति विपदस्तारां च तोयप्लवे॥

माया कुण्डलिनि क्रिया मधुमती काली कला मालिनी
मातङ्गी विजया जया भगवती देवी शिवा शाम्भवी ।
शक्तिः शंकरवल्लभा त्रिनयनावाग्वादिनी भैरवी
ह्रींकारी त्रिपुरा पराऽपरमयी माता कुमारीत्यसि ॥

आनन्दसुन्दरपुरन्दरमुक्तमाल्यं, मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं भवतु मे विजयाय मञ्जु मञ्जीरशिञ्जतमनोहरमम्बिकायाः ॥
सौन्दरविभ्रमभुवो भुवनाधिपत्य सम्पत्तिकल्पतरवस्त्रिपुरे जयन्ति ।
एते कवित्वकुमुदप्रकरावबोध पूर्णेन्दवस्त्वयि जगज्जननि प्रणामाः ॥

गणेशवटुकस्तुता रतिसहायकामान्विता,
स्मरारिवरविष्टरा कुसुमबाणबाणैर्युता ।
अनङ्गकुसुमादिभिः परिवृताचसिद्धैस्त्रिभिः
कदम्बवनमध्यगा त्रिपुरसुन्दरी पातु नः ॥

यः स्तोत्रमेतदनुवासरमीश्वरायाः श्रेयस्करं पठति वा यदि वा शृणोति ।
तस्येप्सितं फलति राजभिरीडयतेऽसौ जायेत स प्रियतमो हरिणेक्षणानाम् ॥
ब्रह्मेन्द्ररुद्रहरिचन्द्रसहस्ररश्मिस्कन्दद्विपाननहुताशनवन्दितायै ।
वागीश्वरि त्रिभुवनेश्वरि विश्वमातरन्तर्बहिश्चकृतसंस्थितये नमस्ते ॥
देवि त्र्यम्बकपत्नि पार्वतिसति त्रैलोक्यमातः शिवे
शर्वाणि त्रिपुरे मृडानि वरदे रुद्राणि कात्यायणि ।
भीमे भैरवि चण्डि शर्वरि कले कालक्षये शूलिनी
त्वत्पादप्रणतानऽनन्यमनसः पर्याकुलान्पाहिनः ॥
लक्ष्मीवशीकरणचूर्णसहोदराणि त्वत्पादपङ्कजरजांसि चिरं जयन्ति ।
यानि प्रणाममिलितानि नृणां ललाटे लुम्पंति दैवलिखितानि दुरक्षराणि ॥
रे मूढाः किमयं वृथैव तपसाकायः परिक्लिश्यते
यज्ञैर्वा बहुदक्षिणैः किमितरे रिक्तीक्रियन्ते गृहाः ।
भक्तिश्चेदऽविनाशिनी भगवती पादद्वयी सेव्यता-
मुन्निन्द्राम्बुरुहातपत्रसुभगा लक्ष्मी पुरो धावति ॥

ॐ यामाऽऽमनन्ति मुनयः प्रकृतिं पुराणीं
विद्येतियां श्रुतिरहस्यविदो वदन्ति ।
तामऽर्धपल्लवितशंकररूपमुद्रां
देवीमऽनन्य शरणः शरणं प्रपद्ये ॥

आविर्भवत्पुलकसन्ततिभिः शरीरै र्निष्यन्दमानसलिलैर्नयनैश्च नित्यम् ।
वाग्भिश्च गद्गदपदाभिरुपासते ये पादौ तवाम्ब हृदयेषु त एव धन्यः ॥
अज्ञातसम्भवमनाकलितान्ववायं भिक्षुं कपालिनमवाससमद्वितीयम् ।
पूर्वं करग्रहणमङ्गलतो भवत्याः शम्भुं क एव बुबुधे गिरिराजकन्ये ॥
चर्माम्बरं च शवभस्मविलेपनं च भिक्षाटनं च नटनं च परेतभूमौ ।
वेतालसंहतिपरिग्रहता च शम्भो शोभां बिभर्तिगिरिजे तव साहचर्यात् ॥
त्वं चन्द्रिका शशिनि तिग्मरुचौ रुचिस्त्वं
त्वं चेतनासि पुरुषे पवने बलं त्वम् ।
त्वं स्वादुतासि सलिलेशिखिनि त्वमूष्मा
निःसारमेवनिखिलं त्वदृते यदि स्यात् ॥
ज्योतींषि यद्दिविचरन्ति यदन्तरिक्षं
सूते पयांसि यदहिर्धरणीं च धत्ते ।
यद्वाति वायुरनलो यदुदर्चिरास्ते
तत्सर्वमम्ब तव केवलमाज्ञयेव ॥

विद्यां परां कतिचिदम्बरमम्ब केचिदानन्दमेव कतिचित्कतिचिच्चमायाम् ।
त्वां विश्वमाहुरपरे वयमामनाम साक्षादपार करुणां गुरुमूर्तिमेव ॥
कुवलयदलनीलं बर्बरस्निग्धकेशं पृथुतर कुचभारा क्रान्तकान्तावलग्नम् ।
किमिह बहुभिरुक्तैस्त्वत्स्वरूपं परं नः सकलभुवनमातः सन्ततं सन्निधत्ताम्॥

वहन्ती सिन्दूरं प्रबलकबरीभारतिमिर-
त्विषां बृन्दैर्बन्दी कृतमिवनवीनार्क किरणाम् ।
तनोतु क्षेमं न स्तव वदनसौरम्यलहरी
परीवबाहस्रोतः सरणिरिव सीमन्तसरणि ॥

अजानन्तो यान्ति क्षयमवशमन्योन्यकलहै-
रमी माया ग्रन्थौ तव परिलुठन्तः समयिनः ।
जगन्मातर्जन्मज्वरभयतमः कौमुदि वयं
नमस्तेकुर्वाणाः शरणमुपयामो भगवतीम् ।।

तडित्कोटिज्योतिर्द्युतिदलितषड्ग्रन्थिगहनं
प्रविष्टं स्वाधारं पुनरपि सुधावृष्टिवपुषा ।
किमप्यष्टात्रिंशत्किरणसकलीभूतमनिशं
भजे धाम श्यामं कुचभरनतं बर्बरकचम् ।।

चतुष्पत्रान्तः षड्दलभगपुटान्तस्त्रिवलय-
स्फुरद्विद्युद्वह्निद्युमणिनियुताभद्युतियुते ।
षडश्रं भित्वादौ दशदलमथद्वादशदलं
कलाश्रं च द्व्यश्रं गतवति नमस्ते गिरिसुते ।।

प्रकाशनन्दाभ्यामविदितचरींमध्यपदवीं
प्रविश्यैतद्द्वन्द्वं रविशशिसमाख्यं कवलयन् ।
प्रविश्योर्ध्वं नादं लयदहनभस्मीकृतकुलः
प्रसादात्ते जन्तुः शिवमकुलमम्ब! प्रविशति ।।

मनुष्यास्तिर्यञ्चो मरुत इति लोकत्रयमिदं
भवाम्भोधौमग्नं त्रिगुणलहरीकोटिलुठितम् ।
कटाक्षश्चेदत्र क्वचन तव मातः करुणया
शरीरीसद्योयं व्रजति परमानन्दतनुताम् ।।

तडिद्वल्लीं नित्यामम्रृत सरितं पाररहितां
मलोत्तीर्णाज्योत्स्नां प्रकृतिमगुणग्रन्थिगहनाम् ।
गिरां दूरां विद्यामऽवनतकुचां विश्वजननी-
मपर्यन्तां लक्ष्मीमभिदधति सन्तो भगवतीम् ।।

शरीरं क्षित्यम्भः प्रभृतिरचितं केवलमिदं
सुखं दुखं चायं कलयति पुमाँश्चेतन इति ।

स्फुटं जानानोऽपि प्रभवति न देही रहयितुं
शरीराहंकारं तव समयबाह्यो गिरिसुते ।।

पिता माता भ्राता सुहृदऽनुचरः सद्म गृहिणी
वपुः पुत्रो मित्रं धनमपि यदा मां विजहति ।
तदा मे भिन्दाना सपदि भयमोहान्धतमसां
महाज्योत्स्ने मातर्भव करुणया सन्निधिकरी ।।

शिवस्त्वं शक्तिस्त्वं त्वमसि समया त्वं समयिनी
त्वमात्मा त्वं दीक्षा त्वमयमणिमादिर्गुणगणः ।
अविद्या त्वं विद्या त्वमसि निखिलं त्वं किमपरं
पृथक्तत्वंत्वत्तो भगवति न वीक्षामह इमे ।।

असंख्यैः प्राचीनैर्जननि जननैः कर्मविलया-
द्गते जन्मन्यन्तं गुरुवपुषमासाद्य गिरिशम् ।
अवाप्याज्ञां शैवीं क्रमतनुरपि त्वां विदितवान्
नयेयं त्वत्पूजा स्तुतिविरचनेनैवदिवसान् ।।

भुविपयसि कृशानौ मारुते खे शशाङ्के
सवितरि यजमानेऽप्यष्टधा शक्तिरेका ।
वहति कुचभराभ्यां या विनम्रापि विश्वं
सकलजननि सा त्वं पाहिमामित्यवश्यम् ।।

अविद्यानमऽन्तस्तिमिरमिहिरोद्दीपनकरी
जडानां चैतन्यस्तवकमकरन्दस्रुतिसिरा ।
दरिद्राणां चिन्तामणिगुणनिकाजन्मजलधौ
निमग्नानां दंष्ट्रा मुररिपुवराहस्य भवती ।।

त्वदन्यः पाणिभ्यामभयवरदो दैवतगण-
स्त्वमेका नैवासि प्रकटितवराभीत्यभिनया
भयान्त्रातुं दातुं फलमपि च वाञ्छासमधिकं
शरण्ये लोकानां तव हि चरणावेव निपुणौ ।।

सुधासिन्धोर्मध्ये सुरविटपिवाटी परिवृते
मणि द्वीपे नीपो पवनवति चिन्तामणिगृहे ।
शिवाकारे मञ्चे परमशिवपर्यङ्कनिलयां
भजन्ति त्वां धन्याः कतिचन चिदानन्दलहरीम् ।।

भवानी त्वां दासे मयि वितर दृष्टिं सकरुणा-
मिति स्तोतुं वाञ्छन्कथयति भवानि त्वामितियः ।
तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं
मुकुन्द ब्रह्मेन्द्र स्फुटमुकुटनीराजितपदाम् ।।

त्रयाणां देवानां त्रिगुणजनितानां परशिवे
भवेत्पूजा पूजा तव चरणयोर्या विरचिता ।
तथाहि त्वत्पादो द्वहनमणिपीठस्य निकठे
स्थिता ह्येते शश्वन्मुकुलितकरोत्तंसमुकुटाः ।।

सुधामप्यास्वाद्य प्रतिभयजरामृत्युहरणीं
विपद्यन्ते विश्वे विधिशतमुखाद्या दिविषदः ।
करालं यत्क्ष्वेडं कवलितवतः कालकलना
न शम्भोस्तन्मूलं जननि तव ताटङ्कमहिमा ।।

ददातीष्टान्भोगान्क्षपयति रिपून्हन्ति विपदो
दहत्याधीन्व्याधीञ्छमयति सुखानि प्रतनुते ।
हठादऽन्तर्दुःखं दलयति पितष्टीष्टविरहं
सकृद्ध्याता देवी किमिव निरवद्यं न कुरुते ।।

शब्दब्रह्ममयि स्वच्छे देवि त्रिपुरसुन्दरि ।
यथाशक्ति जपं पूजां गृहाण परमेश्वरि ।।
नन्दन्तु साधकाः सर्वे विनश्यन्तु विदूषकाः ।
अवस्था शाम्भवीमेऽस्तु प्रसन्नोऽस्तु गुरु सदा ।।
दर्शनात्पापशमनी जपान्मृत्युविनाशिनी ।
पूजिता दुःख दौर्भाग्य हरा त्रिपुर सुन्दरी ।।

नमामि यामिनीनाथ लेखालङ्कृतकुन्तलाम् ।
भवानी भवसन्तापनिर्वापणसुधानदीम् ॥
मन्त्रहीनं क्रियाहीनं विधिहीनं च यद्गतम् ।
त्वया तत्क्षम्यतां देवि कृपया परमेश्वरि ॥
आवाहनं न जानामि नैवजानामि पूजनम् ।
पूजाभागं न जानामि क्षम्यतां परमेश्वरि ॥

---

शान्ति पाठ

ॐ भद्रङ्कर्णेभिः श्रृणुयाम देवा, भद्रं पश्येमाक्षिभियजत्राः
स्थिरैरङ्गैस्तुष्टुवां सस्तनूभिर्व्यशेम देवहितं यदायुः ।

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाऽस्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमी स्वति नोबृहस्पतिर्दधातु ॥

शन्नो मित्र शंवरुणः शन्नो भवत्वर्यमा । शन्न इन्द्रो बृहस्पति शन्नो विष्णुरुरुक्रमः । नमो ब्रह्मणे नमो वायवे नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि, ऋतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवतु अवतु मामवतु वक्तारं शान्तिः शान्तिः शान्तिः, सह नौ अवतु स नौ भुनक्तु सहवीर्यं करवावहै, तेजस्विना अधीतमस्तु मा विद्विषावहै शान्तिः शान्तिः शान्तिः ॥

असतो मा सद्गमय, तमसो मा ज्योतिर्गमय, मृत्योर्माम्रृतं गमय ।

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते, पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॐ शान्तिः शान्तिः शान्तिः ॥

—:०:—

अथ जयस्तुति

ओं जय जगदीश हरे, प्रभु जय जगदीश हरे,
भक्तजनों के संकट क्षण में दूर करे ॐ जय०

जो ध्यावे फल पावे दुःख विनाशे मन का,
सुख सम्पत्ति घर आवे कष्ट मिटे तन का ॐ जय०

मात पिता तुम मेरे शरण गहूँ किसकी,
तुम बिन और न दूजा आस करूँ जिसकी ॐ जय०

तुम पूर्ण परमात्मा तुम अन्तर्यामी,
पारब्रह्म परमेश्वर तुम सबके स्वामी ॐ जय०

तुम करुणा के सागर तुम पालन कर्ता,
मैं सेवक तुम स्वामी कृपा करो भर्ता ॐ जय०

तुम हो एक अगोचर सबके प्राणपति,
किस विध मिलूं दयामय तुमको मैं कुमति ॐ जय०

दीनबन्धु दुःखहर्ता तुम रक्षक मेरे
अपने चरण लगावो द्वार पड़ा तेरे ॐ जय०

विषय विकार मिटाओ पाप हरो देवा,
श्रद्धा भक्ति बढ़ाओ सन्तन की सेवा ॥ ॐ जय०

---

जय नारायण जय पुरुषोत्तम जय वामन कंसारे, उद्धर मामसुरे विनाशन् पतितोहं संसरे। घोरं हर मम नरकरिपो केशव कल्मषभारं मामनुकम्पय दीनमनाथं कुरु भवसागर पारम् ॥ जय जय देव जयासुरसूदन जय

केशव जय विष्णो। जय लक्ष्मी मुखकमलमधुव्रत जय दशकन्धर जिष्णो ।। घोरं हर० त्वं जननी जनकः प्रभुरच्युत त्वं सुहृत्कुलमित्रम्। त्वं शरणं शरणागतवत्सल त्वं भवजलधिवहित्रं ।। घोरं ह० पुनरपि जननं पुनरपि मरणं पुनरपि गर्भ निवासम्। सोढुमलंपुनरस्मिन्माधव मामुद्धरनिजदासम् घोरं हर० जनकसुतापति चरणपरायण शंकरमुनिवरगीतम्। धारय मनसि कृष्णपुरुषोत्त त्वं वारय संसृतिभीतिम् ।। घोरं हर० यद्यपि सकलमहं कलयामि हरे नहि किमपि स सत्वम्। तदपि न मुञ्चति मामिदमच्युत पुत्रकलत्र मम त्वम् ।। घोरं हर० ।।

—:०:—

व्याप्तचराचर भाव विशेषं चिन्मयमेकमनन्तमनादिम्। भैरवनाथमनाथशरण्यं त्वन्मयचित्ततया हृदि वन्दे ।। त्वन्मयमेतदशेषमिदानीं भाति मम त्वदनुग्रहशक्त्या। त्वं च महेश सदैव ममात्मा स्वात्ममयं मम तेन समस्तम्।। स्वात्मनि विश्वगतेत्वयि नाथे तेन न संसृतिभीति कथास्ति। सत्स्वपि दुर्धरदुःखविमोह त्रासविधायिषु कर्मगणेषु ।। अन्तक मां प्रति मा दृशमेनां क्रोधकराल तमां विदधीहि। शङ्करसेवन चिन्तन धीरो भीषण भैरवशक्तिमयोस्मि ।। इत्थमुपोढभवन्मयसंविद्दीधितिधारितभूरितमिस्त्रः। मृत्युयमान्तककर्मपिशाचैर्नाथ नमोस्तु न जातु बिभेमि ।। प्रोदितसत्यबिबोधमरीचि प्रोक्षितविश्वपदार्थसतत्त्वः। भावपरामृतनिर्भरपूर्णे त्वय्यहमात्मनि निर्वृत्तिमेमि ।। मानसगोचरमेति यदैव क्लेशदशाऽतनुतापविधात्री। नाथतदैव मम त्वदभेदस्तोत्रपरामृतवृष्टिरुदेति ।। शंकर सत्यमिदं व्रतदान स्नानतपोभवतापविनाशि। तावकशास्त्रपरामृतचिन्ता सिन्धति चेतसि निर्वृतिधारा ।। नृत्यति गायति हृष्यति गाढं संविदियं मम भैरवनाथ। त्वां प्रियमाप्य सुदर्शनमेकं दुर्लभमन्यजनैः समयज्ञम् ।। वसुरसपौषेकृष्णदशम्यामभिनवगुप्तः स्तवमिममकरोत्। येन विभुर्भवमरुसन्तापं शमयति झटिति जनस्य दयालु ।।

———

## ॐ गौरीस्तुति

ॐ लीलारब्धस्थापितलुप्ताखिललोकां, लोकातीतैर्योगिभिरन्तर्हृदि मृग्याम्। बालादित्य श्रेणिसमानद्युतिपुञ्जां गोरीमम्बामम्बुरुहाक्षीमहमीडे।। आशपाशक्लेशविनाशं विदधानां पादाम्भोज ध्यानपराणां पुरुषाणाम्। ईशीमीशाङ्गार्धहरां तां तनुमध्यां।। गौरी० प्रत्याहार ध्यानसमाधिस्थितिभाजां नित्यं चित्ते निर्वृत्तिकाष्ठां कलयन्तीम्। सत्यज्ञानानन्दमयीं बां तडिदाभां।। गौरी० चन्द्रापीडानन्दितमन्दस्मितवक्त्रां, चन्द्रापीडालंकृतलोलालकभाराम्। इन्द्रोपेन्द्राद्यर्चितपादाम्बुजयुग्मां।। गौरी० नाना कारैः शक्तिकदम्बैर्भुवनानि व्याप्य स्वैरं क्रीडति यासौ स्वयमेका। कल्याणीं तां कल्पलतामानतिभाजां।। गौरी० मूलाधारादुत्थितवन्तीं विधिरंध्रं सौरं चान्द्रं धाम विहाय ज्वलिताङ्गीम्। स्थूलां स्मूक्षां सूक्ष्मतरां तामभिवंद्यां।। गौरी० आदिक्षान्तामक्षरमूर्त्या विलसन्तीं भूते भूते भूत-कदम्ब प्रसवित्रीम्। शब्दब्रह्मानन्दमयीं तामभिरामां।। गौरी० यस्याः कुक्षौ लीनमखण्डं जगदण्डं भूयो भूयः प्रादुर्भूदक्षतमेव। भर्त्रा सार्धं तां स्फटिकाद्रौ विहरंतीं।। गौरी० यस्यामेतत्प्रोतमशेषं मणिमाला सूत्रे यद्वत् क्वापि चरं चाप्यचरं च। तामध्यात्मज्ञानपदव्या गमनीया।। गौरी० नित्यः सत्यो निष्कल एको जगदीशः साक्षी यस्या सर्गविधौ संहरणेच। विश्वत्राण क्रीडनशीलां शिवपत्नीं।। गौरी० प्रातःकाले भावविशुद्धि विदधानो भक्त्या नित्यं जल्पति गौरीदशकं यः। वाचां सिद्धि सम्पत्तिमुच्चैः शिवभक्तिं, तस्यावश्यं पर्वतपुत्री विदधाति।। गौरीमम्बामम्बुरुहाक्षीमहमीडे।।

।। ॐ इति शुभ भूयात्।।



